शब्दग्राहकं श्रोत्रं यदा योगिनो भवति तदा तस्य श्रोत्रस्य श्रावणमि,ति तान्त्रिकी संज्ञा भवति तथा घ्राणस्य वार्ता, संज्ञेत्याद्यूहनीयम् ॥ ३६ ॥

ननु तर्ह्ययं योगी कृतकृत्य इत्यत आह ।

ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥

"ते"प्रातिभाऽऽदयः "समाधौ"निःश्रेयसफले रतस्यो"पसर्गा" विघ्ना भवन्ति । अतो मुक्त्यर्थी तानुपेक्षते । न ह्यात्मसम्बोधनं विना सिद्धिकोट्याऽपि कृतकृत्यता भवति । तदुक्तम् । परमगुरुणा "श्रीकृष्णेन" ।

एतद् बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारतेति ।

"व्युत्थाने"रतस्य तु ताः "सिद्धयो"भवन्तीत्यर्थः ॥ ३७ ॥

तदेवं संयमस्य ज्ञानरूपां विभूतिमात्मदर्शनान्तामुक्त्वा क्रियारूपामाह ।

बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥

सर्वत्र व्याप्तिशीलस्य चित्तस्य स्वशरीरमात्रे सङ्कोचेन स्थितिर्बन्धः तस्य कारणं धर्माधर्मौ तयोः संयमेन शैथिल्यं भवति । प्रचरत्यनेन चित्तमिति प्रचारो नाडीसङ्घः तस्यापि संयमेन संवेदनमधुनाऽनया नाड्या सञ्चरतीतिज्ञानं भवति, तथा प्राणेन्द्रियमार्गनाडीज्ञानं भवति । तथा च बन्धकरज्जुनाशे मार्गज्ञस्य स्वपरवेश्मप्रवेशव"च्चित्तस्य"परकाये मृते जीवति वा प्रवेशो भवति चित्तमन्विन्द्रियाणि विशन्ति मधुकरराजमिव मक्षिका इत्यर्थः ॥ ३८ ॥

९

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च॥ ३९॥

द्वयी खल्विन्द्रियाणां प्रवृत्तिः । बाह्याऽऽद्याऽऽलोचनरूपा, आन्तरी जीवनयोनिप्रयत्नरूपा सर्वकरणसाधारणी, अस्या कार्याः पञ्च प्राणादयः। तत्र नासिकाऽग्रादाहृदयं स्थितः प्राणः, आहृदयादानाभि स्थितः समानो भुक्तं समं नयतीति, आनाभेरापादतलं स्थितोऽपानो मलमपनयतीति, आनासाग्रादाशिरो वृत्तिरुदान उत्क्रान्तिहेतुः, सर्वदेहव्यापी व्यानः, तेषु प्राणः श्रेष्ठः । तत्रोदानस्य संयमेन जयादब्धिपङ्ककण्टकादिष्वसक्तो योगी लघुत्वादुपरि गच्छति, स्वेच्छया मरणं च लभत इत्यर्थः ॥ ३९ ॥

समानजयाज्ज्वलनम् ॥ ४० ॥

नाभिनिकटस्थाग्निव्यापिनः समानस्य वशीकारादग्ने-"र्ज्वलनं"भवति, येन ज्वलन्निव दृश्यत इत्यर्थः । एवं प्राणादिजयात्स्वेच्छया तत्क्रियासिद्धिर्बोध्या ॥ ४० ॥

श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥

आहङ्कारिकस्यापि श्रोत्रस्याकाशेनाधाराधेयभावोऽस्ति । उपलक्षणमेतत्। त्वग्वाय्वोः,चक्षुस्तेजसो,रसनयोः,घ्राणभूम्योः, सम्बन्धेषु संयमाद्दिव्यानीन्द्रियाणि श्रावणवेदनाऽऽद्युक्तसंज्ञानि सम्भवन्ति, यैर्दिव्यशब्दादीन्युगपज्जानातीत्यर्थः ॥ ४१ ॥

कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४२ ॥

तयोः संयोगं जित्वा लघुनि तूलादौ वा तद्भावेन स-

माधिना लघुकायो भूत्वाऽऽदौ जले विहरति । तत ऊर्णनाभि-तन्तुषु विहरति । पश्चात्सूर्यरश्मिषु । ततो यथेष्टमाकाशे गच्छतीत्यर्थः ॥ ४२ ॥

बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥४३॥

देहेऽहंभावे सत्येव; मे मनो बहिरस्त्विति कल्पनया मनसो देहा "द्बहि" र्वृत्तिलाभो भवति, सा कल्पिता विदेहाऽऽख्या धारणा तया देहेऽहंभावत्यागे सति स्वत एव बहिर्वृत्तिलाभो भवति सेयमकल्पिता "महाविदेहा" ऽऽख्या धारणा । "ततः" प्रकाशस्वभावस्य चित्तस्य क्लेशकर्माद्यावरणक्षयो भवति । ततः सर्वज्ञत्वलाभ इत्यर्थः । पञ्चभूतानां स्थूलं दृश्यमानमवयवसंस्थानं पृथिवीत्वादिजातिमत् क्रमेणैकैकन्यूनैः शब्दादिभिः पञ्चगुणैः स्थूलैर्युक्तमित्येकं रूपम् । अथ द्वितीयं तेषां स्वरूपं क्रमेण काठिन्यस्नेहौष्ण्यप्रेरणसर्वगतत्वलक्षणं, प्रेरणा वायोस्तृणादिवाहकत्वम् । अथ तृतीयं तेषां रूपं सूक्ष्मं कारणं परमाणवः, तेषां सूक्ष्माणि पञ्चतन्मात्राणि । अथ चतुर्थं तेषां रूपं गुणत्रयं तद्धि स्वकारणत्वेनान्वेतीत्यन्वयः सामान्यम् । अथ पञ्चमं तेषां भूतानां रूपमर्थवत्त्वं भोगापवर्गसामर्थ्यं गुणनिष्ठं स्वेषु गुणान्वयादागतम् । एवं भूतानां पञ्चरूपेषु कार्यस्वरूपहेतुषु स्थूलादिक्रमेण संयमाद्भूतानि योगिसङ्कल्पानुसारीणि भवन्ति, वत्सानुसारिण्य इव गाव इत्यर्थः ॥ ४३ ॥

ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ ४४ ॥

"ततो"भूतजयाद्योगिनोऽणिमाद्यष्टसिद्धयः प्रादुर्भवन्ति । परमाणुतुल्यत्वमणिमा, विभुत्वं महिमा, तूलपिण्डवल्लघुत्वं लघिमा, मेरुवद् गुरुत्वं गरिमा, अङ्गुल्या चन्द्रसंस्पर्शनं प्राप्तिः, सत्यसङ्कल्पत्वं प्राकाम्यम्, भूतनियन्तृत्वं वशित्वं, भूतस्रष्टृत्वमीशित्वमि, त्यष्टैश्वर्याणि । अत्र प्राप्त्यन्तानि स्थूलसंयमात्सिद्ध्यन्ति । स्वरूपसंयमात्प्राकाम्यम् । अन्यशिष्टं हेतुसंयमादिति विभागः । "कायसम्प"द्वक्ष्यते, तस्य कायस्य भूतधर्मैः काठिन्यादिभिरनभिघातश्च भूतजयात्सिध्यति । येन शिलाऽन्तः प्रविशति, शीतोष्णादयो न बाधन्त इत्यर्थः ॥ ४४ ॥

रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् ॥४५॥

चक्षुःप्रियं रूपं, लावण्यं सर्वाङ्गसौन्दर्यं, बलं वीर्यं, वज्रस्येव संहननमवयवव्यूहे यस्य तद्भावो वज्रसंहननत्वं, हनुमति प्रसिद्धम् ॥ ४५ ॥

भूतजयानन्तरमिन्द्रियजयोपायमाह ।

ग्रहणस्वरूपास्मिताऽन्वयार्थवत्त्वसंयमादिन्द्रियजयः॥४६॥

शब्दः षड्जादिः, स्पर्शः शीतादिः, रूपं पीतादिः, रसो मधुरादिः, गन्धः सुरभ्यादिरिति, सामान्यविशेषात्मकशब्दादिगोचराः पञ्च वृत्तयः कार्याः श्रोत्रादीन्द्रियाणां ग्रहणानि प्रथमं रूपं, प्रकाशकत्वं स्वरूपं तेषां द्वितीयं, अस्मितालक्षणसात्विकाहङ्कारः कारणं तेषां तृतीयम्, । अन्वयार्थवत्त्वे चतुर्थपञ्चमे व्याख्याते । तेषु पञ्चस्विन्द्रियरूपेषु संयमा"दिन्द्रियजयो"भवति ॥ ४६ ॥

ततः किं तत्राह ।

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥४७॥

मनोवत्कायस्यानुत्तमो गतिलाभो "मनोजवित्वं," विदेहानपेक्षाणामिन्द्रियाणां दूरबाह्यार्थज्ञाने विकरणत्वं "विकरणभावः," प्रधानस्यान्वयस्य चतुर्थरूपस्य जयः सर्वजगद्वशित्वमि,ति सिद्धय इन्द्रियजयाद्भवन्तीत्यर्थः । एता अणिमाद्याः प्रधानजयान्ताः सिद्धयो ऽस्मिन् शास्त्रे "मधुप्रतीका" उच्यन्ते, मधुन एकदेशवदास्वाद्यन्त इति मधुप्रतीका मधुतुल्या इत्यर्थः । यद्वा । स्थूलादिप्रधानान्तवस्तुविषया योगजन्यर्तम्भरप्रज्ञा मधु तत्प्रतीकं कारणं साक्षात्कृतं भूतेन्द्रियजयद्वारा यासां ता मधुप्रतीकाः ॥ ४७ ॥

एवं संयमाज्ज्ञानक्रियासिद्धयः साक्षाच्छुद्धाद्वारा आविवेकख्यात्यर्था उपन्यस्ताः । संप्रति विवेकख्यातेरवान्तरसिद्धिमाह ।

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्त्वं च ॥ ४८ ॥

पूर्वोक्तसूत्रार्थसंयमेन निर्धूतरजस्तमोमलस्यान्तःकरणस्य जये वशीकारसंज्ञायामपरस्यां विरक्तौ स्थितस्य बुद्धिसत्त्वात्मनोर्भेदख्यातिर्जायते तन्मात्रस्य तदावृत्तिपरस्य योगिनः सर्वेषां भावानां प्रधानतत्परिणामानामधिष्ठातृत्वं नियन्तृत्वं, सर्वेषां भूतभवद्भाविनां ज्ञातृत्वं, च सिद्ध्यति । एषा "विशोका" नाम सिद्धिः ॥ ४८ ॥

अधुना विवेकख्यातेर्मुख्यां सिद्धिमाह ।

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ४९ ॥

तस्यां विशोकायां सिद्धौ वैराग्यात्तद्धेतौ विवेकख्यातावपि वैराग्यं परं भवति । ततो दोषाणां क्लेशानां बीजं भ्रान्तिसंस्कारस्तस्य क्षये सर्वात्मना तिरोभावे सति चित्तस्य परवैराग्यसंस्कारशेषतायां पुरुषस्य स्वरूपप्रतिष्ठत्वं "कैवल्यं" सिद्धयति । इयं "संस्कारशेषा" ऽऽख्या सिद्धिः ॥ ४९ ॥

अत्र विघ्नोत्पत्तौ निरासोपायमाह ।

**स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५० ॥**

चत्वारः खल्वमी योगिनः । प्रथमकल्पिको, मधुभूमिकः, प्रज्ञाज्योति, रतिक्रान्तभावनीय, श्च । तत्राद्यः संयमे प्रवृत्तमात्रेण किं चित्परचित्तादिकं जानाति । द्वितीयः संप्रज्ञातयोगेन मधुमतीं चित्तभूमिमृतम्भराप्रज्ञाऽवस्थां लब्ध्वा भूतेन्द्रियाणि साक्षात्कृतानि विजिगीषते तज्जयद्वारा पूर्वोक्ताः क्रमेण मधुप्रतीका विशोका संस्कारशेषा चेति तिस्रो भूमीर्लब्धुकामः । तृतीयस्तु जितभूतेन्द्रियत्वान्महेन्द्रादिभिरक्षोभ्यो लब्धभूमिद्वयो विशोकाऽऽदिभूमिद्वयसिषाधयिषया स्वार्थसंयमयत्नवान् । चतुर्थस्तु भगवान्महाऽनुभावो लब्धविवेकान्तभूमित्रयो विरक्तो विघ्नशङ्काशून्यो जीवन्मुक्तश्चतुर्थभूमौ वर्त्तते । यस्य सप्तधा प्रान्तभूमिः प्रज्ञा व्याख्याता । तत्राद्यस्य योगिनो देवनिमन्त्रणयोग्यता नास्ति । अतः परिशेषान्मधुभूमिको योगी द्वितीयो यस्तस्य स्थानिभिः तत्तत्स्थानस्वामिभिर्महेन्द्रादिभिरुपनिमन्त्रणं प्रार्थनं क्रियते, भोः इहास्यतां स्वर्गादिस्थाने, रम्यतां कमनीयेयं कन्या, दिव्योऽयं भोगो, रसायनमिदं जरामृत्युनिवारकमि,दं कामगं यानमि,त्येवंप्रार्थने सङ्गः कामः, अहो प-

मायं योगप्रभाव इति स्मय,श्च न कर्त्तव्यः। किं त्वित्थं तत्र दोषं भावयेद् घोरेषु संसाराङ्गारेषु पापच्यमानेन मया जन्ममृति-प्रबन्धचक्रारूढेन कथं चिदासादितः क्लेशकर्मान्धकारविध्वंसि-योगप्रदीपः, तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः, स खल्वहं लब्धालोकः कथमनया मृगतृष्णया वञ्चितः; तस्यैव पुनः पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्यामि,ति स्व-स्ति वः स्वप्नोपमेभ्यः कृपणमार्थनीयेभ्यो विषयेभ्य इत्येवं नि-श्चितमतिः, समाधिं भावयेत्। सङ्गे पातिसं, स्मये कृतकृत्यम्मन्य स्य योगासिद्धिः, ततो योगभ्रष्टस्य पुनः संसारस्यानिष्टस्य प्र-सङ्गात् सङ्गस्मययोरकरणं कैवल्यविघ्ननिरासोपाय इत्यर्थः॥५०॥

पूर्वं बुद्धिप्रतिबिम्बितपुरुषस्य स्वार्थसंयमात्तारकं विवे-कज्ञानमुक्तं, तत्रोपायान्तरमाह ।

क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५१ ॥

अभेद्यः कालभागः सत्यः क्षणः । अन्ये मुहूर्त्तादयः का-लभागाः क्षणसमूहरूपा असत्याः । न हि क्षणानां समूहो व-स्तुसन् तत्रायमस्मात्पूर्वक्षणोऽयमुत्तरक्षण इति क्षणानां, तेषां क्रमस्य, पौर्वापर्यस्य संयमादतिसूक्ष्माणां भेदसाक्षात्का-रो विवेको भवति । तेन च युगपद्वियदादीनां पुरुषान्तानां ज्ञानं साक्षात्कारात्मकं जायत इत्यर्थः ॥ ५१ ॥

इदं क्षणसंयमजं ज्ञानं सर्वविषयमित्यग्रे वक्ष्यते । संप्रति सूक्ष्मं तस्य विषयविशेषमाह ।

जातिलक्षणदेशैरन्यताऽनवच्छेदे तुल्ययोस्ततः प्र-तिपत्तिः ॥ ५२ ॥

अवच्छेदो निश्चयः । लोके हि भावानां त्रयो भेदनिश्चयहेतवः । तत्र देशेन लक्षणेन च तुल्ययोर्गोगवययोर्जात्या भेदधीः । देशजातिभ्यां तुल्ययोर्गवोः कृष्णश्वेतादिलक्षणेन भेदधीः । जातिलक्षणाभ्यां तुल्ययोरामलकयोः पूर्वोत्तरादिदेशभेदाद्भेदनिश्चयः । यदा पुनर्योगिनो ज्ञानपरीक्षाऽर्थं केन चित्पूर्वदेशस्थमामलकमुत्तरामलकदेशे विन्यस्योत्तरामलकमन्यव्यासक्ते योगिन्यपहृतं, तदा तयोरामलकत्वजातिरूपपरिणामादिलक्षणेन देशेन च "तुल्ययो"र्जात्यादिभिरन्यत्वनिश्चयासंभवात् "ततः"क्षणसंयमजविवेकज्ञानादेवान्यत्वप्रतिपत्तिर्योगिनो भवति । यस्मिन् क्षणे पूर्वामलकमुत्तरत्र विन्यस्तं, तस्मात्प्राचीनक्षणेषु तस्मिन्पूर्वदेशस्थरूपपूर्वपरिणाममाला जाता नोत्तरामलके, तस्य तेषु क्षणेषूत्तरत्वपरिणाममालावत्त्वात्. तथा च क्षणक्रमज्ञो योगी तयोः पूर्वोत्तरस्वपरिणाममालाक्षणेभ्योऽस्य क्षणस्यानन्तर्यं जानन्नधुनेदमुत्तरमितः प्राक् पूर्वं नोत्तरमिति भेदं निश्चिनोतीत्यर्थः ॥ ५२ ॥

तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति
विवेकजं ज्ञानम् ॥ ५३ ॥

तत्तत्संयमात्सर्वज्ञतोक्ता, सा प्रकारमात्रविषया यथा रसवत्यां निष्पन्नैः सर्वैर्व्यञ्जनैर्भुक्तमिति सर्वैर्व्यञ्जनप्रकारैर्भुक्तमिति गम्यते। तद्यथा पुनः पात्रस्थैः सर्वैर्व्यञ्जनैरुपनीतं सर्वमन्नं भुक्तमित्युक्ते स्वरूपतः प्रकारतश्च निशेषं भुक्तमिति गम्यते, तद्वदिदं क्षणसंयमजं विवेकज्ञानं सर्ववस्तुस्वरूपविषयं, "सर्वथाविषयं"सर्वप्रकारविषयं, पुरुषतत्त्वावगाहित्वात्संसारसागरात्तारयतीति "तारक"संज्ञ"मक्रमं" युगपदेव करतलामलकवत्सर्वसमूहावलम्बनमित्यर्थः ॥ ५३ ॥

एवं विवेकख्यातिकाष्ठाऽवधिकान् तत्तद्विभूतिफलान् संयमानुपन्यस्य तादृशविवेकख्यातिकाष्ठाऽस्तु वा मा वा सत्त्वपुरुषान्यतासाक्षात्कारमात्रं मुक्तये कल्पत इत्यभिप्रेत्याह ।

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५४ ॥

निरस्तसमस्तरजोमलस्य बुद्धिसत्त्वस्य विवेकख्यात्या संस्कारशेषस्य सर्ववृत्तिशून्यत्वं शुद्धिः, पुरुषस्यापि नित्यशुद्धस्य तदा कल्पितभोगशून्यत्वं शुद्धिः, एवं तयोः "शुद्धिसाम्ये" सति "कैवल्यम्"।तत्तद्विभूतयस्तु श्रद्धोत्पादनार्थमुपन्यस्ताः।कैवल्यं तु बुद्धिविलक्षणपुरुषसाक्षात्कारमात्रादविद्यानिवृत्तावनागतदुःखानुत्पादरूपं सिध्यतीत्यर्थः ॥ ५४ ॥

## इति विभूतिपादः ॥ ३ ॥

सर्वसाधनसिद्धीनां या स्यात्सिद्धिरनुत्तमा ।
कैवल्यरूपा तन्मात्रं सीतारामं नमाम्यहम् ॥

प्रथमद्वितीयपादयोर्योगतत्साधने प्रतिपादिते । तृतीये संयमसंज्ञमन्तरङ्गत्रयं संयमस्य लक्ष्याः परिणामभेदाः सिद्धयश्चोक्ताः । तत्र काश्चिदतीतानागतज्ञानादिसिद्धयः श्रद्धाद्वारा कैवल्ययोगस्याङ्गम् । काश्चिदिन्द्रियजयादयः साक्षादङ्गम् । तारकसंज्ञिविवेकज्ञानसिद्धिर्योगस्य फलमिति निरूपितम् । इदानीं कैवल्यस्वरूपं प्राधान्येन प्रतिपादनीयं, तदर्थं कैवल्यभागीयं चित्तं परलोकः क्षणिकविज्ञानातिरिक्तात्मा चित्तविकारसुखादिभोक्ता धर्ममेघश्च वक्तव्यः प्रासङ्गिकं चान्यद्वक्तव्यमि,ति चतुर्थः पाद आरभ्यते । तत्र प्रथमसिद्धचित्तेषु कैवल्ययोग्यं चित्तं वक्तुकामः पूर्वोक्तसिद्धीनां हेतुभेदात्पञ्चविधत्वमाह ।

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥

जन्मना यक्षादीनामाकाशगमनादिसिद्धिः कपिलादीनां च सांसिद्धिकीत्युच्यते । ओषधिविशेषसेवया माण्डव्यादीनाम् । मन्त्रजपेन केषां चिदणिमादिसिद्धिः । तपसा विश्वामित्रादीनां सिद्धिः । एताश्चतस्रः "सिद्धयः" पूर्वजन्माभ्यस्तयोगजा एव जन्मादिनिमित्तेन व्यज्यन्ते । अत एव योगाभ्यासे विश्वासेन प्रवृत्तिरिह सिद्ध्यदर्शनेऽपि जन्मान्तरे साफल्यात् । "समाधिजास्तु" पूर्वपादे व्याख्याताः ॥ १ ॥

ननु तपःप्रभावादिहैव नन्दीश्वरस्य श्रीगौरीवल्लभकटाक्षवीक्षणेन देवशरीरपरिणामः श्रूयते । तत्र न तावदयं नरदेहो देवादिदेहस्योपादानं तस्मिन् स्थिते परिणामान्तरायोगान्नष्टस्याहेतुत्वात् । नापि तदवयवा एवोपादानं नरदेहमात्र-

हेतोर्विलक्षणकार्यकारित्वायोगादित्याशङ्क्याह ।

जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

प्रधानादयः पृथिव्यन्ताः प्रकृतयस्तासां सर्वत्र सत्त्वा-न्नरादिदेहावयवेषु तासामापूराद्धर्मादिनिमित्तानुरोधेनावय-वानुप्रवेशा "ज्जात्यन्तरपरिणामो" युज्यते यथाऽग्निकणस्य प्रकृ-त्यनुग्रहाद्वनादौ बहुतृणादिमण्डलव्यापित्वं तद्वदित्यर्थः ॥ २ ॥

ननु प्रकृत्यापूरो धर्मादिनिमित्तमपेक्षते न वा । न चेत्स-र्वत्रापूरापत्तिः । नाद्यः । धर्मादेः प्रवर्तकत्वे पुरुषार्थः प्रवर्तक इति सिद्धान्तविरोधादित्यत आह ।

निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

निरीश्वरसांख्ये हि पुरुषार्थ एवानागतः प्रकृतीनां प्रवर्तकः । अस्माकं तु सेश्वराणां तदुद्देशेनेश्वरः प्रवर्तक इत्यु-द्देश्यतया पुरुषार्थः प्रवर्तक इत्युच्यते । "निमित्तं" तु तासां न प्रवर्तकं तत्कार्यत्वात् । किं तु "ततो" निमित्ताद्वरणस्य प्रतिब-न्धस्य बाधो भवति धर्मेणाधर्मनिरासे प्रकृतयः स्वयमेव देवादिपरिणामे प्रवर्तन्ते पापातिशयेन पुण्यप्रतिबन्धे सति तिर्यगादिपरिणामो यथा नहुषस्य सर्पपरिणामः । "क्षेत्रिक-वदि"ति यथा क्षेत्रिकः कृषीवलो जलस्योन्नतदेशादिवरणभे-दनमात्रं करोति ततो जलं स्वयमेव केदारान्तरे प्रवर्तते त-द्वदित्यर्थः ॥ ३ ॥

ननु यदा योगी युगपद्भोगार्थं बहून्कायान् निर्मिमीते तदा तेषु चित्तानि कुतो भवन्त्यत आह ।

निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

योगप्रभावान्निर्मीयन्त इति निर्माणानि चित्तानि योगिसङ्कल्पाधीनप्रकृत्यापूरात्कायवदहङ्कारात्प्रकृतेर्जायन्त इत्यर्थः॥४॥

तर्हि चित्तानां भिन्नभिन्नाभिप्रायत्वाद्योगिनो भोगासिद्धिरित्यत आह ।

प्रकृतिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

निर्मितचित्तानां योगी स्वभोगानुकूलप्रवृत्तिविशेषनियामकं चित्तं निर्मिमीते योगबलात्त"च्चित्तं" तेषां नायकं भवति तेन भोगस्तदनुसन्धानं युज्यत इत्यर्थः ॥ ५ ॥

एवं जन्मादिभिः पञ्चविधानि सिद्धचित्तान्युक्तानि तेष्वपवर्गभागीयं चित्तं निर्द्धारयति ।

तत्र ध्यानजमनाशयम् ॥ ६ ॥

"तत्र" तेषु जन्मादिजेषु यत्समाधिजं त"दनाशयं" क्लेशवासनाशून्यं मोक्षयोग्यमित्यर्थः ॥ ६ ॥

योगिनश्चित्तवत्कर्मापि विलक्षणमित्याह ।

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥

वाङ्मनससाध्यं सुखैकफलकं शुक्लं कर्म स्वाध्यायतपःशीलानां भवति । दुःखैकफलकं कर्म कृष्णं दुरात्मनां भवति । सुखदुःखमिश्रफलकं बाहिःसाधनसाध्यं शुक्लकृष्णं सोमयागादिरतानां भवति । तत्र व्रीह्यादिवधेन पिपीलिकाऽऽदिपरिपीडया दक्षिणादानादिपरानुग्रहेण च योगादिदं "त्रिविधं" कर्मे"त-

रेषाम"योगिनां भवति। "योगिनस्तु" संन्यासिनो बाह्यसाधनसाध्यकर्मत्यागान्न शुक्लकृष्णं कर्म, क्षीणक्लेशत्वान्न कृष्णं, योगजधर्मस्य फलमनभिध्यायेश्वरार्पितत्वान्न शुक्लं कर्मास्ति, अतश्चित्तशुद्धिविवेकख्यातिद्वारा मोक्षैकफलक"मशुक्लाकृष्णं" "कर्मे"त्यर्थः ॥ ७ ॥

कर्मणः प्रसङ्गाद्वासनाऽभिव्यक्तिफलमाह ।

ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥८॥

"तत"स्त्रिविधात्कर्मणो मरणकालानन्तरं जात्यायुर्भोगरूपविपाकदानायाभिव्यक्तौ तस्य विपाकस्यानुगुणानां "वासनाना"मभिव्यक्तिर्भवति न विरुद्धानामित्यर्थः । देवत्वप्राप्तौ चित्ते प्रसुप्ता एव नरकभोगवासना भवन्ति तासामभिव्यक्तौ दिव्यभोगायोगादितिभावः ॥ ८ ॥

ननु स्वर्गदेशे देवजन्मनि जातास्तद्भोगेभ्यो वासनाः कथं नरव्याघ्रादिजन्मसहस्रव्यवधानानन्तरं पुनर्देवजन्मन्यभिव्यज्यन्ते। अनन्तरजन्मपूर्ववासना एव पूर्वदिनवासनावत्कुतो न व्यज्यन्त इत्यत आह ।

जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

यद्यपि सुप्तोत्थितस्यानन्तरपूर्वदिनानुभवजवासनाः प्रायेणाभिव्यज्यन्तेऽव्यवधानात् तथाऽप्यनादिसंसारे येनकर्मणा यज्जन्मनि भोगैर्वासनाः सञ्चिताः तासां जन्मकोट्या देशेन कल्पशतेन च व्यवहितानामपि तज्जातीयेन कर्मणा तज्जन्मनि पुनः प्राप्ते सति तेनैव कर्मणा जन्मना वाऽभि-

व्यक्तानामानन्तर्यमव्यवहितत्वं स्मृतिद्वारा भोगादिहेतुत्वमिति यावत् । विजातीयकर्मारब्धानन्तरपूर्वजन्मवासनानां व्यञ्जकाभावात् प्रसुप्तिरेव व्यवहितानामपि कर्मजन्मनोरभिव्यञ्जकयोः सत्त्वादभिव्यक्तिर्युक्ता । न च विजातीयत्वेऽप्यव्यवधानादनन्तरपूर्ववासना एव ताभ्यां स्मृत्याद्यर्थमभिव्यज्यन्तामिति वाच्यम् । स्मृतिसंस्कारयोरेकरूपत्वादयमर्थः क्रिया ज्ञानमन्यद्वा रागादिकं शक्त्यात्मना स्थितः संस्कारः । स च स्वसमानविषयकक्रियास्मृत्यादिहेतुः । क्रियासंस्कारः क्रियात्मना, ज्ञानसंस्कारः स्मृत्यात्मना,ऽन्यसंस्कारोऽन्यात्मना, परिणमत इति यावत् । एवं स्मृतिसंस्कारयोरभेदेनैकविषयत्वेन चैकरूपत्वात् आनन्तर्यशब्दितः कार्यकारणभावो न विजातीययोः । न हि व्यवधानं संस्कारस्य विरूपकार्यकारित्वमापादयति घटानुभवजसंस्कारादनन्तरमननुभूतस्मृत्यापत्तेरिति ॥ ९ ॥

ननु जन्मान्तरितवासना न सन्तीति वदन्तं चार्वाकं प्रत्याह ।

तासामनादित्वं चाशिषो नित्यत्वात् ॥ १० ॥

न केवलं "तासां" वासनानामानन्तर्यं किं त्वनादित्वमपीति चार्थः । कुतः । सदाऽहं भूयासमित्याशिषो मरणत्रासस्य नित्यत्वात्सर्वजनेष्वव्यभिचारादित्यर्थः । इदमत्राकूतम् । जातमात्रस्य कम्पाद्यनुमितो मरणत्रासो द्वेष्यदुःखस्मृतिमव्यभिचारात्कल्पयति, सा वासनां, साऽपि मरणजदुःखानुभवं, सोऽस्मिञ्जन्मन्यसम्भाव्यमानो जन्मान्तरं, कल्पयतीत्यनादित्वसिद्धिरिति । ननु देहस्यानात्मत्वे कस्य जन्ममरणत्रासः आत्मनोऽनाद्यन्तस्योभयत्वादिति चेत्, चित्तस्येति ब्रूमः तस्यैव

ह्यनादिवासनाऽनुविद्धस्याचित्तस्याहङ्कारिकत्वेन विभुनस्तत्तदेहसङ्कोचविकासशीलवृत्तिलाभो जन्मवृत्त्युपरमो मरणं तत्काले दुःखमित्यादिसर्वसंसारः ॥ १० ॥

नन्वनादिवासनानां कथमुच्छेदस्तत्राह ।

हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥

नैताः पुरुषवदनादयः किं तु कार्या एवं प्रवाहानादयः अतः कारणोच्छेदादुच्छेदसम्भवः । तथा हि पूर्वपूर्वभ्रमसंस्कारलक्षणाविद्याऽहमित्यस्मिताहेतुः सा च नरोऽहं ममेदमनिष्टमिति भ्रमहेतुः सोऽपि रागद्वेषयोस्तौ च परनिग्रहादिद्वारा धर्माधर्मयोस्तौ च भोगे सोऽपि वासनासु ताः पुनर्भ्रमादिष्वनादिसंसारचक्रमनिशमावर्त्तते । तत्र वासनानां क्लेशकर्माणि हेतवः, देहायुर्भोगाः फलं, चित्तमाश्रयः, शब्दादिकमालम्बनम्, एतैः "संगृहीतत्वा" द "षां" क्रियायोगाङ्गयोगजाविप्लवविवेकरुयात्या उच्छेदे सति कारणानामभावादुच्छेदो भवतीत्यर्थः ॥ ११ ॥

ननु सतां संस्काराणां कथमभाव इत्यत आह ।

अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ १२ ॥

नासतामुत्पादो न सतां विनाशः "नासतो विद्यते भावो नाभावो विद्यते सत" इति परमेश्वरगीताश्रुतेः । "वेदाहं समतीतानि वर्त्तमानानि चार्जुन भविष्याणि च भूतानी" ति वर्तमानवदतीतानागतस्य प्रत्यक्षवेद्यत्वोक्तेश्च न ह्यसतः प्रत्यक्षवेद्यत्वं सम्भवति तस्मादतीतानागतं धर्मजातं धर्मिणि शक्तिरूपेणास्त्येव यत्परिणामत्रयसंयमाद्विना योगिनः साक्षात्कुर्वन्ति कुलालादयश्च

बुद्धावालिख्य कुर्वन्ति यदाऽन्वयी धर्मी स्थिर एक उक्तः । ननु तर्हि वासनाऽऽदिबन्धसत्त्वात्तत्त्वज्ञानवैयर्थ्यमिति चेन्न । धर्माणामनागताद्यध्वनां भेदाद्वर्तमानाध्वनि हि दुःखादिवासनाचित्रं साधिकारमसंख्येयपरिणामशीलं चित्तं भोग्यताऽऽपन्नं बन्ध उच्यते । तत्त्वज्ञाने सति निरधिकारमतीताध्वनि प्रवेशितं प्रकृत्यात्मना सदपि पुनरुत्थानबीजस्य कर्तव्यपुरुषार्थस्य कृतत्वान्न पुनरावर्तत इत्यर्थः ॥ १२ ॥

अतीतानागतं स्वरूपतोऽस्तीत्युक्तं तत्र किं स्वरूपमित्यत आह ।

ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥

व्यक्ता वर्तमानाध्वानः, सूक्ष्मा अतीतानागताध्वानः, ते महदादयो घटादिविशेषान्ताः गुणात्मानः सत्त्वरजस्तमःस्वरूपा इत्यर्थः । सर्वे भावाः सुखदुःखमोहात्मकगुणान्वितत्वेन तत्प्रकृतित्वात्तत्स्वरूपा एव यथा घटादयो मृदन्विताः मृत्स्वरूपाः प्रकृतिविकारयोर्भेदाभेदरूपतादात्म्यात्तत्र गुणाः परिणामिनित्याः । अन्ये सर्वे भावाः प्रतिक्षणपरिणामाः क्षणविध्वंसिनः । पुरुषस्तु कूटस्थः । तदुक्तं भाष्ये ।

गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकमिति ॥
ऐन्द्रजालिकवत्क्षणविध्वंसीत्यर्थः ॥ १३ ॥

ननु यदि त्रयो गुणाः परिणामिनः तर्हि परिणामानां प्रत्येकमेकत्वं न स्यात् न हि मृत्तन्तुदुग्धानामेकः परिणामो दृष्ट इत्यत आह ।

परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥

बहूनामप्येकः परिणामो दृष्टः यथा रुमास्थले क्षिप्तानां गजाश्वादीनामेको लवणपरिणामः, वर्त्तितैलाग्नीनामेको दीपपरिणामः, मृदादीनां त्वङ्गाङ्गित्वाभावान्न परिणामैकत्वम् । गुणानां तु परिणामस्याङ्गाङ्गिभावस्यैकत्वाद्वस्तुनो महदादेस्तत्त्वमेकत्वं युज्यते । तत्र सत्त्वस्याङ्गित्वे गुणत्रयादेको महान्, तस्मादेकस्माद्रजःप्रधानादहङ्कारः, तमःप्रधानात्पञ्च तन्मात्राणि प्रत्येकमेकत्ववन्ति भवन्ति, अहङ्कारात्सात्त्विकाद्बुद्धीन्द्रियाणि, राजसात्कर्मेन्द्रियाणि, उभयात्मकान्मनः । एवं शब्दतन्मात्रस्याङ्गित्वे सत्याकाशः पञ्चतन्मात्राणामेकः परिणामः । एवं स्पर्शरूपरसगन्धतन्मात्राणां क्रमेणाङ्गित्वे वाय्वग्न्यम्बववनयः प्रत्येकं जायन्ते । एकस्माद्बहवः परिणामास्तु बहुपरिणामवासनारूपशक्तिवैचित्र्यादित्यलं विस्तरेण ॥ १४ ॥

ननु क्षणिकविज्ञानात्मकचित्तातिरिक्तं वस्तु नास्त्येव यत्प्रमेयं तद्विज्ञानाभिन्नं, यथा विज्ञानं, प्रमेयाश्च घटादयोऽतः कस्यैकत्वनानात्वचिन्ता चित्तमेव ह्यनादि समनन्तरप्रत्ययात्मकवासनाविचित्रं द्रव्यगुणात्मना भातीति वदन्तं बौद्धं प्रत्याह ।

वस्तुसाम्येऽपि चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥

तयोश्चित्तवस्तुनो "विभक्तः" "पन्था" भिन्नो मार्गः विज्ञानार्थयोर्भेद इति यावत् । कुतो वस्तुनः स्त्रीपिण्डादेः साम्येऽपि चित्तानां भेदाद्यदेकस्यां नार्यां पत्युः सुखविज्ञानं, सपत्न्या दुःखविज्ञानं, तदलाभे कामुकस्य मोहो विषादस्तद्विज्ञानं, निष्कामस्योपेक्षाविज्ञानं, सर्वेषां या त्वया दृष्टा सा मयाऽपि दृष्टेत्यबाधितप्रत्यभिज्ञानादेकं वस्त्वनेकं विज्ञानमिति तयोर्भेदः । यदेकं तदनेकेभ्यो भिन्नं, यथा नीलविज्ञानं पीतवि-

ज्ञानेभ्यः, एकं च वस्त्वतः स्वगोचरानेकविज्ञानेभ्यो भिन्नम् । न च प्रमेयस्य प्रमैक्यं युक्तम् । एकत्वे विषयविषयित्वविरोधाद्बाह्यार्थाभावे विज्ञानानां नीलपीताद्याकारत्वायोगाच्च । न च प्रमेयात्मकवासना तत्र हेतुरिति वाच्यम् । नष्टस्याहेतुत्वात् । न चैकरूपादर्थात्तत्र कथं चित्तवैचित्र्यमिति वाच्यम् । अर्थस्य त्रिगुणत्वाद्धर्माधर्मविद्याऽपेक्षयाऽर्थगतानां सत्त्वरजस्तमसामुद्रेकात्सुखदुःखमोहविज्ञानहेतुत्वं तत्त्वज्ञानापेक्षया गुणानां साम्याद्रुपेक्षाहेतुत्वमिति युक्तत्वात्तस्मादस्ति विज्ञानातिरिक्तोऽर्थः॥१५॥

यत्तु कश्चिदाह । अस्तु विज्ञानादन्योऽर्थः स तु जडत्वाद्विज्ञानग्राह्यः प्रातिभासिको नाज्ञातोऽस्तीति । स वक्तव्यः कुतस्तस्योत्पत्तिरिति, ग्राहकविज्ञानाच्चित्तादिति चेत् किमेकचैत्रचित्तस्य घटवस्तुकार्यम्, उत चैत्रमैत्राद्यनेकचित्तानां, नाद्यइत्याह ।

न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥

यद्येकचित्तस्य कार्यं घटवस्तु तदा तस्मिंश्चित्ते पटादिषु व्यग्रे तद्वस्त्व“प्रमाणकं”“किन्न”ष्टं“स्या”दित्यर्थः । न चेष्टापत्तिः । पुनस्तद्दर्शने सोऽयमित्यबाधितप्रत्यभिज्ञानादेकस्य व्यग्रत्वेऽप्यन्येन दृश्यमानत्वाच्च तस्मान्नैकचित्ततन्त्रं वस्तु नाप्यनेकचित्ततन्त्रं प्रातिभासिकस्य स्वप्नवदेकचित्ततन्त्रत्वनियमात्पूर्वमेकेन दृश्यमाने घटे बहुचित्तैः पश्चात्सम्बन्धे विलक्षणघटान्तरोत्पत्तिप्रसङ्गाच्च सामग्रीवैलक्षण्यात् । किं चोदरदर्शनकाले पृष्ठभागो नास्तीत्युदरमपि न स्यात् तस्मान्न प्रातिभासिकं वस्तु किं तु चित्तातिरिक्तं स्वतन्त्रमिति सिद्धम् ॥ १६ ॥

ननु सिद्धान्ते विभुनश्चित्तस्य सर्वसम्बन्धात् सदा सर्वं ज्ञायेतेत्यत आह।

तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥१७॥

यद्यप्याहङ्कारिकत्वाच्चित्तेन्द्रियाणि विभूनि तथाऽपि तेषामहङ्कारे सुप्तानां सम्बन्धो विषयस्य स्फूर्त्तावहेतुः किंतु कर्मणाऽभिव्यक्तानां देहस्थानां, तथा चेन्द्रियद्वारा येनार्थेन "चित्तस्यो"परागः तस्मिन्नर्थे चित्तं स्वनिष्ठचित्प्रतिविम्बरूपां स्फूर्त्तिं धत्ते तमर्थं स्वाकारवृत्तिद्वारा बुद्धिस्थप्रतिविम्बद्वारा पुरुषश्चेतयते नान्यमिति "वस्तु" "ज्ञाताज्ञातं" भवति। अत एव चित्तं तदर्थोपरागमपेक्ष्य कदा चिद्वस्तु जानाति कदा चिन्नेति ज्ञाताज्ञातविषयत्वात्परिणामीति भावः ॥ १७ ॥

तर्ह्यात्मनः परिणामित्वमित्यत आह।

सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥

पुरुषस्य हि क्षिप्तमूढादिसर्ववृत्तिकं चित्तं विषयः स यदि चित्तेन स्वविषयशब्दादिवत् पुरुषेण स्वसत्ताकाले न ज्ञायेत तदा चित्तवत्परिणामी स्यात्पुरुषः वृत्तिपरिणामं तत्तदाकारमपेक्ष्य तज्ज्ञातृत्वापातात् तदा किं परिणामिद्वयेनेति चित्तादन्यः पुरुषो न स्यात् सदैव तु स्वसत्ताकाले ज्ञायमानाश्चित्तवृत्तयो भोग्याः शब्दाद्याकाराः तस्य भोग्यस्य प्रभोर्भोक्तुरपरिणामित्वं ज्ञापयन्ति साक्षिणोऽपरिणामित्वादेव हि स्वयं "सदा" "ज्ञाता" भवन्ति नान्यथेत्यर्थः ॥ १८ ॥

ननु चित्तमेव क्षणिकं स्वप्रकाशं स्वस्वार्थयोर्भासकम-

स्तु किं साक्षिणेत्यत आह ।

न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥

रूपी घट इतिवत् सुख्यहं, क्रुद्धोऽहं, शान्तं मे मन, इति "दृश्यत्वा"च्चित्तं "स्वाभासं" स्वप्रकाशं "न" भवतीत्यर्थः । अयं भावः । किमिदं स्वप्रकाशत्वं न तावत्स्वाभिन्नप्रकाशक्रियाकर्मत्वं क्रियाकर्मणोरैक्यायोगान्न हि गतिर्गम्यते; किं तु ग्रामः, नापि पुरुषवच्चित्तस्य स्वभिन्नप्रकाशाविषयत्वं क्रुद्धं मे मन इत्यनुभवविषयत्वादतो दृश्यत्वात्स्वातिरिक्तद्रष्टृकं चित्तं सोऽहमितिप्रत्यभिज्ञानान्न क्षणिकमिति ॥ १९ ॥

किञ्च ।

एकसमये चोभयानवधारणम् ॥ २० ॥

क्षणिकवादिन एकस्मिन्नेव क्षणे चित्तचैतन्ययोरुभयोरवधारणं न सम्भवतीत्यर्थः । तथा हि । घटमहमद्राक्षमिति चित्तार्थयोः स्मरणं तयोरनुभवजन्यं तत्र चित्तक्षणे तयोः कथमनुभवः । न च चित्तमेवोभयानुभव इति वाच्यम् । अर्थस्य चित्तजन्यत्वेऽर्थक्षणे चित्तासत्त्वादजन्यत्वे तत्समकालत्वेऽपि तदुत्पत्तितादात्म्ययोरभावेन तद्ग्राह्यत्वायोगाद् असम्बद्धग्राहित्वे चित्तस्य सर्वज्ञताऽऽपत्तिः । उक्तं हि । "सौगतैः" "अतदुत्पत्तिरतदात्मा च तेन न गृह्यत" इति । न वा चित्तं स्वानुभवं दृश्यत्वादित्युक्तं, नापि चित्तं स्वस्वार्थयोरनुभवद्वयम् । अतिक्षणिकस्योत्पत्तिव्यतिरिक्तव्यापाराभावात् । उक्तं हि । "भूतिर्येषां क्रिया सैव कारकं सैव चोच्यत" इति । न चैकस्माद्व्यापारभेदं विना कार्यभेदो युक्तः । न वा स्वप्ने ज्ञानं

ज्ञेयं च युगपत्कर्तुं शक्यं तस्मात्साक्षिणैव चित्तचैतन्ययोरनुभव इति सिद्धम् ॥ २० ॥

ननु माऽस्तु चित्तं स्वदृश्यं चित्तान्तरेण दृश्यतां किं साक्षिणेत्यत आह ।

चित्तान्तरदृश्यत्वे बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ॥ २१ ॥

यदि नीलाकारं चित्तं चित्तान्तरेण दृश्यं तदा तदपि बुद्धिरूपं चित्तमन्यया बुद्ध्या साऽप्यन्ययेत्यनवस्थापातात् । न च द्वित्रास्त्रिचतुराः पञ्चषा वा चित्तात्मानो ग्राह्या इति नानवस्थेति वाच्यम् । ग्राहकचित्तस्यानिश्चये ग्राह्यचित्तानिश्चयात् गेहे घटो दृष्टो न वेति संशये, न दृष्ट इति व्यतिरेकनिश्चये, चार्थनिश्चयादर्शनेन ज्ञानचित्तानिश्चयस्यार्थानिश्चयाहेतुत्वात् तत्तदनन्तचित्तानामनुभवे चानन्तचित्तस्मृतीनां संकरश्च प्राप्नोति स्मृत्यानन्त्यादशक्यग्रहत्वात् ग्राहकाभावाच्चेयं नीलचित्तस्मृतिरियं पीतचित्तस्मृतिरिति विभागो न स्यादित्यर्थः। चित्तानां समत्वाद् दीपानामिव ग्राहकत्वासंभवश्च। अतः साक्षिवेद्यं चित्तमिति सिद्धम् ॥ २१ ॥

ननु कूटस्थस्य साक्षिणश्चित्तेन क्रियापूर्वकसम्बन्धाभावात्तत्तेन कथं संवेद्यमित्यत आह ।

चितेरप्रतिसंक्रमायास्तदाकारताऽऽपत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥

यथा बुद्धेः क्रियया घटादिसंश्लेषः प्रतिसंक्रमोऽस्ति परिणामित्वान्न तथा चितेर्बुद्धौ प्रतिसंक्रमोऽपरिणामित्वात् ।

किं तु सूर्यस्य जले प्रतिबिम्बवच्चितेर्बुद्धौ प्रतिबिम्बे सति बुद्धेश्चिदाकारताऽऽपत्तौ स्वस्य भोग्याया बुद्धेः संवेदनं भवति चिच्छायाग्राह्यत्वसंबन्धेन चिदुपरक्तं चित्तं चिद्वेद्यमित्यर्थः । "अप्रतिसंक्रमाया"श्चितेः सान्निध्यात्तस्याश्चितेराकारश्छाया यत्र तद्भावापत्तौ सत्यां स्वभोग्यबुद्धिसंवेदनमिति योजना ॥२२॥

ननु यदि चित्तातिरिक्त आत्माऽस्ति तर्हि कथं केषांचित् चित्तमेवात्मेति भ्रम इत्याशङ्क्य चित्तस्य सर्वार्थग्रहणसामर्थ्यं तेषां भ्रमबीजमाह ।

द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

द्रष्टा पुरुषश्चेतनः दृश्यं शब्दाद्यचेतनमिति तत्सर्वं चेतनाचेतनमर्थो विषयो यस्य तत्सर्वार्थं तत्र तत्सान्निध्याच्चिद्रूपतामिव प्राप्तं द्रष्टृ चिदुपरक्तं द्रष्टृविषयं भवति इन्द्रियादिद्वारा दृश्योपरक्तं तदाकारं भवति । तथा च भोग्यशब्दाद्याकारं सुखदुःखादिपरिणामलक्षणभोगात्मकं दृश्यमपि चित्तं चित्प्रतिबिम्बाभेदादात्मेति भ्रमः सौगतानां युक्तः । चित्तस्य जपाकुसुमाद्यर्थाकारग्रहशीलाभिजातस्य स्फटिकमणिकल्पस्य दृश्याकारग्राहित्वाच्चित्तातिरिक्तार्थो नास्तीति विज्ञानवादिनां भ्रमः । अत्रेत्थं विवेकः । चित्तस्य भोग्यत्वाद्भोक्ताऽन्यः स्वीकर्तव्यः स नित्योदिता चिच्छक्तिरित्युच्यते । द्विधा चिच्छक्तिः नित्योदिता ऽभिव्यङ्ग्या चेति । तत्र नित्योदितायाः कूटस्थचिच्छक्तेः चित्तसत्त्वाभिव्यङ्ग्या चित्प्रतिबिम्बरूपा सुखादिसारूप्यमापन्ना चिच्छक्तिर्भोग इत्युच्यते । स द्विविधश्च भोगः चिदवसानतारूप एकः, परिणामलक्षणोऽपरः, तत्राभिव्यङ्ग्या चिच्छक्तिराद्यः पुरुषस्य

भोगः, अपरः सुखादिपरिणामो बुद्धेः प्राप्तचैतन्याया इति । इत्थं बुद्धिपुरुषान्तरं विविच्य विध्वस्तसमस्तमलजालं निश्चलप्रदीपशिखाकारं समाहितं प्रशान्तवाहिचित्तं पुरुषसत्तां निश्चिनोतीति तात्पर्यम् ॥ २३ ॥

इतश्च चित्तादन्यो भोक्ताऽस्तीत्याह ।

तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्य कारित्वात् ॥ २४ ॥

यद्यपि क्लेशकर्मविपाकवासनाभिरनन्ताभिः सुखाद्याश्रयतया भोक्तृकल्पं "चित्तं" तथाऽपि परस्य निरुपचरितचित्स्वभावस्यार्थौ भोगापवर्गौ साधयतीति "परार्थं" भोग्यमेव न भोक्तेति यावत् । कुतः । संहत्य देहेन्द्रियादिसहकारिभिर्मिलित्वा भोगादिकार्यकारित्वात्, यन्मिलित्वा कार्यकारि तत्परार्थं, यथा गृहादि, न हि स्तम्भादिभिः संहत्य गृहं स्वस्य वसतिं करोति किं तु परस्मै विष्णुमित्राय । एवं गुणा अपि बुद्ध्यादिकं परार्थं कुर्वन्तीति युक्तमत एव पुरुषशेषत्वाद् गुणा उच्यन्ते । तथा च सत्त्वादयः परार्थाः संहत्य कारित्वाद्गृहवदित्यस्य हेतोः पक्षधर्मताबलाद् गुणैरसंहतः शुद्धो निष्कलः स्वार्थश्चिन्मात्रपरः सिध्यति । यो यस्य भोक्ता स तेनासंहतो यथा गृहस्वामीति व्याप्तेः गुणभोक्तुरपि परार्थत्वेऽनवस्थानात्पुरुषान्न परं किं चिदिति "श्रुते"श्च । तस्माद्यस्य भोगापवर्गौ गुणमयबुद्ध्या कर्तव्यौ सुखदुःखाभ्यां योऽनुकूलनीयः प्रतिकूलनीयश्च स भोक्ताऽस्तीति सिद्धम् ॥ २४ ॥

इयता सूत्रजालेन जन्मादिसिद्धिं, चित्तेषु मोक्षयोग्यचित्तं निर्द्धार्य, कर्मवासनाप्रपञ्चपूर्वकं विज्ञानभिन्नार्थसाधनेन परलो-

कादिप्रपञ्चं परलोकिनं च भोक्तारं निरधारयद् । अधुना कैवल्यं निरूपयितुं तद्योग्यमधिकारिणं दर्शयति ।

विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥ २५ ॥

पूर्वसुकृतबलात्कस्य चित्पुरुषधौरेयस्यात्मभावे तत्त्वे भावना जिज्ञासा भवति काहं कस्य कुतो वेति तस्याधिकारिणः पूर्वोक्तविवेकेन बुद्धेरन्यश्चिन्मात्रः पुरुषोऽहमिति "विशेषदर्शिनः" तत्त्वजिज्ञासा विनिवर्तते, इच्छायाः स्वविषयलाभनिवर्त्यत्वात् । यस्य तु नास्तिकस्य देहाद्बुद्धेर्वाऽन्यो भोक्ता नास्तीत्यनात्मन्यात्मभावना दार्ढ्यं सोऽनधिकारी, यस्तत्त्वजिज्ञासुः सोऽधिकारीति भावः ॥ २५ ॥

ननु तत्त्वजिज्ञासोर्विशेषदर्शनानन्तरं कीदृशं चित्तमित्यत आह ।

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥

पूर्वं बुद्ध्यादावात्मभ्रमदशायां यच्चित्तं विषयनिम्नं संसारप्राग्भारमासीत् तदिदानीं निवृत्तभ्रमस्य योगिनश्चित्तं" "विवेकनिम्नं" दृग्दृश्ययोर्भेदो विवेको निम्न आलम्बनभूमिर्यस्य तद्विवेकनिष्ठमिति यावद् अत एव कैवल्यं प्राग्भारोऽवधिर्यस्य त"त्कैवल्यप्राग्भारं" कैवल्यफलावसानं धर्ममेघाख्यध्यानरतं भवतीत्यर्थः ॥ २६ ॥

नन्वीदृशस्य चित्तस्याहंममेतिव्युत्थानप्रत्ययाः कुतो भवन्तीत्यत आह ।

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥

विवेकख्यातिरूपप्रसंख्यानपरस्यान्वहं क्षीयमाणेभ्यो व्यु-

त्थानसंस्कारेभ्यः प्रसंख्यानच्छिद्रेष्वभिव्यक्तेभ्यः प्रत्ययान्तराणि व्युत्थानरूपाणि भवन्तीत्यर्थः ॥ २७ ॥

ननु सत्यपि प्रसंख्याने व्युत्थानसंस्काराः कार्यायोत्तिष्ठन्ति चेत्, कस्तेषां हानोपाय इत्यत आह ।

हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

अविद्यारागादिक्लेशाः क्रियायोगतनूकृताः तत्तदवसरलब्धप्रसराः प्रसंख्यानदहनदग्धाः पुनश्चित्ते संस्कारं न प्रसुवते । एवं व्युत्थानसंस्कारा अपि विवेकख्यात्यपरिपाकदशायां प्रत्ययान्तराणि कुर्वाणाः परिपक्वप्रसंख्यानदहनदग्धात्मबीजभावा न प्रसवधर्माणो भवन्तीति "क्लेशवदेषां" "हानमुक्तं" वेदितव्यमित्यर्थः ॥ २८ ॥

एवं प्रसंख्यानेन व्युत्थानस्य निरोधमुक्त्वा प्रसंख्यानस्यापि निर्बीजयोगापेक्षया व्युत्थानरूपस्य निरोधोपायमाह ।

प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥

षड्विंशतितत्त्वान्यालोचयतः सत्त्वपुरुषान्यताख्यातिर्या जायते सर्वाधिष्ठातृत्वाद्यवान्तरफला तत् प्रसंख्यानम्, तत्र "प्यकुसीदस्य" कुत्सितेषु विषयेषु सीदतीति कुसीदो रागः तद्रहितस्य सर्वात्मना विवेकख्यातिरेव सन्ततिरूपो "धर्ममेघसंज्ञः" "समाधिः"र्भवति । स च खल्वशुक्लकृष्णं धर्मं कैवल्यफलं मेहति सिञ्चतीति धर्ममेघ इत्युच्यते । प्रसंख्याने वैराग्याद्धर्ममेघे सति परवैराग्योदयात्प्रसंख्यानस्य निरोधो भवतीति भावः ॥ २९ ॥

इमं क्रमं स्फुटयति ।

१२

ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

"ततो" धर्ममेघात् क्लेशानां पञ्चानां सवासनानां तन्मूलानां कर्मणां च निवृत्तिर्भवतीत्यर्थः ॥ ३० ॥

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥

आवृण्वन्ति चित्तमित्यावरणा रजस्तमोमयाः क्लेशकर्मरूपा मलाः सर्वे ते आवरणाश्च मलाश्च सर्वावरणमलाः तैर्धर्ममेघध्यानेनापेतस्य "ज्ञानस्य" शुद्धबुद्ध्यालोकस्या "नन्त्या" "ज्ज्ञेयं" चेतनाचेतनात्मकं सर्व "मल्पमे" व भवति, यथा शरदि अशेषघनादिमलापेते नभसि सर्वतः प्रद्योतमानप्रचण्डमार्त्तण्डप्रकाशपटले घटादयः प्रकाश्या अल्पा भवन्ति तद्वदत्यन्तनिर्मलस्य बुद्धिसत्त्वस्य प्रकाशस्य किन्नाम यन्न गोचर इति भावः । सेयं धर्ममेघस्य परा काष्ठा दर्शिता, अत एव धर्मा, न च ध्रियन्त इति व्युत्पत्त्या । सर्वानेव ज्ञेयान्मेहति प्रकाशयत्यपि धर्ममेघ इत्याह, अयमेव हि धर्ममेघपरिपाको ज्ञानप्रसादः करतलीकृतामलकवत्पुरुषं निर्दोषमपरोक्षीकुर्वन्निर्मलजलान्तर्मत्स्यानिव जडाविशुद्धप्रकृतिविकारदृश्यविषयान्तर्गताशुद्धिविनाशादिदोषान् प्रकटयन् चित्ततपस्विनो निर्बीजयोगाख्यनिधिमापादयन् परवैराग्यमित्युच्यते ॥ ३१ ॥

नन्विदं परवैराग्यं क्लेशान्समूलकापं कषत् कुशलाकुशलांश्च कर्माशयान् समूलघातं निहन्तुमुत्सहतां, तथाऽपि गुणानां स्वतः परिणामशीलत्वात् तादृशमपि पुरुषं प्रति देहेन्द्रियाणि परिणामक्रमोऽनुवर्ततामिति तत्राह ।

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

"ततो"धर्ममेघफलीभूतपरवैराग्यात्मकानन्तज्ञानानन्तरं गुणानां भोगविवेकख्यातिरूपपुरुषार्थकरणात्प्राग् यः परिणामानां महदादिघटान्तानां सृष्टावानुलोम्येन, प्रलये घटः पृथिव्यां लीयते; पृथिव्यप्सु; आपस्तेजसी;त्यादि प्रातिलोम्येन, च क्रम आसीत् तस्य परिसमाप्तिरेव तं पुरुषं प्रति "गुणानां,"पुरुषार्थत्वादनागताध्वा हि पुरुषार्थो गुणानां प्रवर्त्तकस्तस्मिन् कृते गुणा न क्षणमपि स्थातुमुत्सहन्त इति भावः ॥ ३२ ॥

क्रमशब्दार्थमाह ।

क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥

क्षणाः कलांशास्तेषु समाहितबुद्धिना क्रमो ज्ञेयः । तत्र"क्षणप्रतियोगी""क्रम"इति स्वरूपनिर्देशः। क्षणौ प्रतियोगिनौ निरूपकौ यस्य स क्षणप्रतियोगी । एवं क्षणिकपरिणामक्रमो मन्तव्यः। तत्र प्रमाणमाह ।"परिणामापरान्तनिर्ग्राह्य"इति मृदि पिण्डघटकपालचूर्णकणानां प्रत्यक्षपरिणामानां पूर्वान्तः पिण्ड अपरान्तः कण, इति पूर्वोत्तरावधिग्रहणेन क्रमो निश्चित्य ग्राह्यो भवति, पिण्डानन्तरं घट इति क्रमोऽत्र प्रत्यक्षः । क चित्सुरक्षितवस्त्रादौ पुराणतादर्शनेन पूर्वान्तनवत्वपरिणाममारभ्य क्षणे क्षणे पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलतरस्थूलतमत्वेन जायमानाया भेदं ज्ञात्वा नवत्वानन्तरं सूक्ष्मतमपुराणता तदनन्तरं सूक्ष्मतरपुराणतेति क्रमोऽनुमेय इत्यर्थः। नन्वयं क्रमः किमनित्येष्वेवास्ति उत नित्येष्वपीति प्रश्नश्चेदस्ति नित्येष्वपीति वदामः। तत्र नित्या द्विविधाः । कूटस्थनित्याः पुरुषाः, परिणामिनित्या गुणाः, । यस्मिन् धर्मिणि धर्मलक्षणावस्थाभिः परिणम्यमाने स्वरूपं न विहन्यते तत्परिणामिनित्यता तत्रा-

नित्येषु बुद्ध्यादिषु धर्मिषु रागादिपरिणामक्रमस्य पूर्वान्त-भावेऽप्यपरान्तः पुरुषसाक्षात्कारोऽस्तीति क्रमः तेषु सावधिकः, गुणेषु परिणामिनित्येषु परिणामक्रमो निरवधिकः, मुक्तपुरुषान्प्रत्युपरमेऽपि बद्धान्प्रत्यविच्छेदात् । ननु सर्वे पुरुषा मुच्यन्ते न वा । आद्ये, प्रधाने परिणामः सावधिकः । द्वितीये, तत्त्वज्ञाना-विश्रम्भ इति । तत्राहुः साङ्ख्याचार्याः । अस्ति त्रिविधः प्रश्नः । एकान्तवचनीयः,विभज्यवचनीयः,अवचनीयश्चे,ति । तत्राद्यो यथा । किमयं सर्वजातो मरिष्यतीति प्रश्नः, स एकान्तेन वक्तव्यः मरिष्यत्येवेति । त्वया कृतस्तु द्वितीयः, स विभज्य वक्तव्यः, यस्य तत्त्वख्यातिः स मुच्यते नान्य इति । एवं च जन्तूनामानन्त्यात्पुराणादौ सर्गप्रलयानन्त्यश्रवणाच्च न सर्वमुक्तिः । तृतीयस्तु प्रधानपरिणामक्रमः समाप्यते नवेति प्रश्नः । अयमुत्तरानर्हः, अशक्यावधारणत्वात् । यद्वा, कुशलस्यान्तवान्संसारक्रमः अकुशलस्य नेति व्याकरणीयोऽयं प्रश्न इति । तस्मात्सदा परिणामिषु नित्येषु गुणेषु क्रमवत्परिणामभेदादस्ति क्रमः, कूटस्थनित्येषु पुरुषेषु बुद्ध्यादिपरिणामभेदारोपात्कल्पितः क्रमो न वास्तव इति सर्वमवदातम् ॥ ३३ ॥

अधुना शास्त्रप्रतिपाद्ययोगफलं कैवल्यं दर्शयति ।

पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥

कृतभोगापवर्गाणां कृतकृत्यानां बुद्ध्यादि "गुणानां" प्रातिलोम्येन प्रसवः व्युत्थानसमाधिपरवैराग्यसंस्कारा मनसि लीयन्ते, मनश्चास्मितायां लीयते, सा महति, महत्तत्वं गुणेष्विति प्रलयः । तत्प्रधानस्य " कैवल्यं " पुरुषाविशेष उपचर्यते । यद्वा, "चि-

तिशक्ति"श्चितस्वभावा पुरुषव्यक्तिः स्वरूपमात्रेण प्रकर्षेण तिष्ठतीति "स्वरूपप्रतिष्ठा" पुनर्बुद्ध्याद्यनर्थेनात्यन्तिकवियोग इति यावत् तदिदं पुरुषस्य नित्यस्य नित्यशुद्धासङ्गस्य प्रकाशस्य कैवल्यमिति रमणीयम् । सौत्र इतिशब्दः शास्त्रपरिसमाप्तिदर्शनार्थः ॥ ३४ ॥

यद्रागप्रणवप्रपत्तिदहनः सद्योऽन्तरायाटवीं
दग्ध्वा स्वात्मनि बोधदीपमचलं सूते तमःपाटनम् ॥
यत्र न्यस्तसमस्तकर्म जनयेद्योगं तदङ्गं विना
वन्दे सिद्धिभुवं तमीशमनिशं कैवल्यदं राघवम् ॥ १ ॥
यत्प्रसादलवः सूते मोक्षाद्याः सर्वसंपदः ।
उमाधवं महेशानं तं काशीनिलयं भजे ॥ २ ॥
फणीन्द्रसूत्रसंबद्धा व्यासवाङ्मणिभूषिता ।
मद्वाङ् मौक्तिकी माला स्यात् सदा रामपादयोः ॥३॥
क्वाहं प्रमादनिरतः क्व वात्सल्यं गुरोरिदम् ।
नूनं महात्मनां दीने स्वतश्चित्तं कृपाऽन्वितम् ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोविन्दानन्दभगवत्पूज्यपादशिष्यश्रीरामानन्दसरस्वतीकृतौ सांख्यप्रवचने योगमणिप्रभायां कैवल्यपादश्चतुर्थः समाप्तः ॥

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ५ | ० |
| गोलप्रकाशः | २ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ५ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला - ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | २ | ० | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ४ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ४ | ० | ० |
| उपसर्गवृत्तिः | ० | १ | ० |

# सूचीपत्रम् ।

| | | | |
|---|---|---|---|
| गणपाठः | ० | ५ | ० |
| गोलप्रकाशः | १ | ८ | ० |
| गंगालहरी | ० | १ | ० |
| गुरुसारणी | ० | ५ | ० |
| जातकतत्त्वम् | ० | १२ | ० |
| तत्त्वदीप | ० | १ | ० |
| तर्कसंग्रहः | ० | १ | ६ |
| दत्तकमीमांसा | ० | ८ | ० |
| धर्म्मशास्त्रसंग्रहः | ० | १ | ६ |
| धातुपाठः ( शिला -) ) | ० | २ | ० |
| धातुरूपावली | ० | २ | ० |
| नैषध चरित नारायणी टीका टाइप | ४ | ० | ० |
| परिभाषापाठः | ० | ० | ६ |
| पाणिनीयशिक्षा भाष्यसहिता | ० | २ | ० |
| प्रथम परीक्षा | ० | २ | ० |
| प्रथमपुस्तक हिन्दी | ० | १ | ० |
| प्रश्नभूषणम् ( प्रश्न विचार का बहुत उत्तम ग्रन्थ ) | ० | ४ | ० |
| बीजगणितम् (म० म० पं० सुधाकरकृतटिप्पणीसहित) | १ | ४ | ० |
| भट्टीकाव्य ५ सर्ग | ० | ६ | ० |
| मनोरमा शब्दरत्नसहिता ( टाइप ) | ९ | ० | ० |
| लघुकौमुदी टिप्पणीसहिता | ० | ४ | ० |
| लक्षणावली | २ | ० | ० |
| लीलावती ( म० म० पं० सुधाकरकृतटिप्पणीसहित ) | १ | ० | ० |
| वसिष्ठसिद्धान्तः | ० | १ | ६ |
| वार्तिकपाठः | ० | ४ | ० |
| विष्णुसहस्रनाम | ० | १ | ० |
| शब्दरूपावली | ० | १ | ६ |
| शृङ्गार सप्तशती | १ | ८ | ० |
| समासचक्रम् | ० | १ | ० |
| समासचन्द्रिका | ० | १ | ० |
| सरस्वतीकण्ठाभरणम् | ३ | ० | ० |
| साङ्ख्यचन्द्रिका टिप्पणीसहिता | ० | ८ | ० |
| साङ्ख्यतत्त्वकौमुदी | ० | ४ | ० |
| सिद्धान्तकौमुदी | ३ | ० | ० |
| सिद्धान्तमुक्तावली दिनकरीटिप्पणीसहिता | ४ | ० | ० |
| उपसर्गवृत्तिः | ० | १ | ० |

# विज्ञापनम् ।

—:०:—

## बनारससंस्कृतसीरीजनाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥।) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैर्यैःकानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

| तत्र मुद्रिता ग्रन्थाः । | रु० | आ० |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रहः अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ३ | ३ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्डे २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ३ | ३ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यं | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ३ | ३ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) | ८ | ० |
| वेदान्तदीपः ( श्रीभगवद्रामानुजाचार्यविरचितः ) खण्डे २ | २ | ० |
| टुप्टीका खण्डे २ | २ | ० |
| पातञ्जलदर्शनम्।श्रीरामानन्दयतिकृतमणिप्रभाऽऽख्यवृत्तिस० | १ | ० |
| न्यायलीलावती ( यन्त्रस्था ) | ० | ० |

**व्रजभूषण दास और कम्पनी**

**चांदनीचौक के उत्तर नई सड़क बनारस ।**